अतिशयवती तु प्रज्ञा प्रतिहेतूत्प्रेक्षिणी दृष्टा । तेनानिश्चयः प्रतियोगिनः संभवासंभवयो-रिति वस्तुतोऽसम्भवत्प्रतिहेतुत्वलक्षणस्यानिश्चितत्वात् न कश्चित् हेतुः स्यात् ।

अथाप्रदर्शितप्रतिहेतुः, यथाह "**यदा तर्हि शब्दत्वं नित्यं अभ्युपगच्छति तदायं हेतुरेव स्यात् यत्र अनित्यत्वहेतुं कृतकत्वादि** 5 **कश्चिन्न दर्शयेद्** " इति । इदमिदानीं सुमहद्व्यसनमायातम्—गुरुभिरभिहितत्वाद-प्रकाश्यम्, न्यायमनुपालयद्भिरसंवरणीयमिति कष्टतरं व्यसनं कथं निर्वोढुं शक्येत ? [1]स तावदयं हेतुः वस्तूनि स्वसाध्यप्रकृतीनि कृत्वा तत्प्रमाणकान् पुरुषान् अभ्युदयनिःश्रेयसाभ्यां च योजयित्वा पुनश्च प्रतिभावता पुरुषेण हेत्वन्तरनिदर्शनेन उत्कीलितसाधनसामर्थ्यः तानि वस्तूनि तांश्च पुरुषान् तद्भावसम्पदः स्वसाध्यप्रकृति-10 त्वसम्पदोऽभ्युदयनिःश्रेयससम्पदश्च प्रच्याव्य भ्रष्टराज्य इव राजा तपोवनं गच्छतीति किमत्र वयं ब्रूमः ।

पुरुषप्रतिभाकृतं हि यदि साधनत्वं स्यात् तदा न किञ्चित् साधनमसाधनं वा । स च हेतुर्यदि स्वभावतस्तद्धर्मभावी [T. 374 b] तदा कथमन्यथा क्रियेत । वस्तुस्वभावा-न्यथाभावस्याभावात् । उभयोश्च एकत्रभावे विरुद्धोभयस्वभाव एकः स्यात् । अतद्धर्म-15 भावी च कथमन्यदपि साधनं कस्यचित् ।

तस्मात् स्वभावतः स्वस्वसाध्याविनाभाविनोर्यथोक्तलक्षणयोः कार्यस्वभावहेत्वोः प्रतिहेतोरसंभवादलक्षणमेकसंख्याविवक्षा, व्यवच्छेद्याभावात् ।

ज्ञानं पुनः न लिङ्गस्यात्मरूपमिति कथं लिङ्गलक्षणं भविष्यति ।

किंरूपाद् हेतोरनुमेयोऽर्थो ज्ञातव्य इति चिन्तायां प्रतिपत्तुरविसंवादकलिङ्ग-20 स्वरूपमभिधीयते यस्य दर्शनाद् 'अयं साधनम्' इति व्यवस्थाप्य तस्येष्टार्थसन्निधान-संप्रत्ययात् प्रवृत्तिमवलम्बते । एतस्मिंश्च यदस्यात्मरूपं तल्लक्षणम् न तु यत् पररूपम् ।

प्रतिपत्तिजन्मनि उपयुज्यते ज्ञानमित्येवं लिङ्गलक्षणत्वे प्रमेयपुरुषादीनामपि तल्लक्षणत्वं भवेत् । न हि तेष्वपि असत्सु लिङ्गिनि ज्ञानं भवति इति ।

निश्चितग्रहणं तर्हि न कर्तव्यम् । न । तस्यान्यार्थत्वात् । सपक्षविपक्षयोः दर्शना-25 दर्शनमात्रतो गमकं हेतुमिच्छतां नैव समर्थो हेतुर्भवति सतोर्दर्शनादर्शनयोरगमकत्वदर्शनात् । ततो भावाभावयोरेव गमको हेतुरिति ज्ञापनार्थं निश्चितग्रहणम् । तेन पररूपं लिङ्गस्य लक्षणं न भवति, [T. 375 a] तेन लिङ्गस्य रूपविशेषानभिधानात् । तौ हि भावा-भावौ तद्भावसाधकप्रमाणवृत्त्या बोद्धव्यौ, उपायान्तराभावात् ।

---

१. न्यायावि० वि० भाग २, पृ. १८०

यद्यपि भावाभाववचनमात्रेण तयोः साधनप्रमाणवृत्तिराक्षिप्यते अन्यथा तयोरेव सत्ताऽप्रसिद्धेः, ज्ञानसत्तानिबन्धत्वात् ज्ञेयसत्ताव्यवस्थायाः। सर्वत्र ज्ञेयसत्ताव्यवस्थैव तत्साधनं प्रमाणमाकर्षति; परार्थत्वाच्च शास्त्रप्रणयनस्य त्रिरूपं लिङ्गं संवादकमर्थस्येति तद्रूपमप्रतिपत्तॄणां ततः प्रवृत्तिर्न भवति, अज्ञातस्य ज्ञापकस्य प्रवर्तकत्वाभावाद् इति परोपलक्षणत्वादेव प्रवर्तके ज्ञानं सिद्धम्; तथापि तौ एव विशिष्टौ भावाभावौ केचिद् दर्शनादर्शनमात्रेण व्यवस्थापयन्ति इति तेषां निषेधार्थोऽयं निश्चितशब्दः प्रयुक्तः। सतोरपि भावाभावयोरन्वयव्यतिरेकयोः संशयात्। तस्मात् प्रतिबंधप्रसाधकप्रमाणवृत्त्यैव भावाभावौ सिध्यतः इति विप्रतिपत्तिनिरासार्थमस्माभिर्निश्चितग्रहणं कृतम्।

यतोऽपि त्रैरूप्यवचनमात्रेण तत्साधनप्रमाणाक्षेपतः तेनैवावगतत्वात् न ज्ञानं पृथगतः रूपान्तरं भवति। उपनयार्थवत् [ T. 375b ] पक्षधर्मत्वात्।

[1]अन्वयव्यतिरेकयोरपि हन्त न पृथक्त्वम्। एकस्य प्रयोगादुभयगतेरिति चेत्। न। हेतोः सपक्षासपक्षयोः भावाभावौ न परस्परमाक्षिपतः। एकं वाक्यमुभयं गमयतीति उच्यते नैकोऽर्थः स्वभावो द्वितीयस्येति। ननु 'तत्रैव भावे' तदर्थतया 'तदभावेऽभावो' गम्यते; 'अतद्भावेऽवश्यमभावे' च 'तद्भावे भावः' इति परस्परान्तर्भावः। वचनमेतत् सामर्थ्यादुभयमाक्षिपति। एकस्यापि नियमव्यापकस्य द्वितीयाक्षेपनान्तरीयकत्वात्। न च तावता उभयोरेकस्वभावता। पृथगभिधानं तु प्रयोगनियमार्थम्। न पुनः केवलौ भावाभावौ परस्परमाक्षिपतः। नियमवन्तौ च न केवलौ, नियमस्य उभयरूपत्वात्।

तस्माद् यदाऽन्वयव्यतिरेकौ भावाभावावभिप्रेतौ तदा तौ भिन्नरूपावेव। नैवं ज्ञानम्, परोपलक्षणशास्त्रागृहीतज्ञानात् त्रैलक्षणादव्यतिरेकादिति न लक्षणान्तरम्। तस्मान्न हेतुः षड्लक्षणः।

। समाप्तं हेतुबिन्दु नाम प्रकरणम् आचार्यधर्मकीर्तिकृतम्।

१. पृ० २२६ पं० ७६।